शिवगीता ॥

सदाशिवस्तोत्रम्

विधिरुवाच

महादेव महादेव महादेवेतिवादिनम् ॥
वत्सं गौरिव गौरिशो धावन्तमनुधावति ॥१॥
महादेव महादेव महादेवेति वादिनम् ॥
नरं मुञ्चति पापानि समुद्रमिव तोयदाः ॥२॥
महादेव महादेव महादेवेत्ययं ध्वनिः ॥
सुधियो मुक्तिकान्तायाः पाणिग्रहणडिण्डिमः ॥३॥
महादेव महादेव महादेवेत्ययं ध्वनिः ॥
मोक्षलक्ष्मीगृहद्वार- कपाटोद्घाटनधुनि ॥४॥
महादेव महादेव महादेवेत्ययं ध्वनिः ॥
उच्चैश्चपेटिकादण्डो मृत्युदैवतगण्डयोः ॥५॥
महादेव महादेव महादेवेत्ययं ध्वनिः ॥
संसारसर्पदुष्टानां दिब्यौषधममुत्तमम् ॥६॥
महादेवेति कल्याणी बाणीयस्य मुखाम्बुजे ॥
स धन्यः पावयेदन्यान् स्वदृष्टि पथगोचरान् ॥७॥
महादेव महादेव महादेवेति शब्दतः ।
प्रथमेनैव मुक्तिःस्यात् द्वाभ्यांशम्भुऋणी भवेत् ॥८॥
महादेव महादेवेत्यरण्य सञ्चरन् जनः ॥
बशीकरोति ब्याघ्रादिनपि सत्यं मयोच्यते ॥९॥
महादेवेति बक्तारं दृष्ट्वैव यमकिङ्करा ॥
पलायन्तये महाभिताः स्मरन्ति यमशासनम् ॥१०॥
महादेवतरुच्छाया नातिसिता न घर्मदा ॥
संसारतापशमनि सा किमर्थं न सेब्यते ॥११॥
महादेवेति बाक्बल्लि चतुरक्षरपल्लबा ॥
भक्तिसिक्ताफलत्येका चतुर्वर्ग फलान्यहो ॥१२॥
महादेवेति नामेदं यः श्रृणोति वदिष्यति ॥
न तेषां नरके वासो सत्यमेव न संशयः ॥१३॥
महादेव महादेव महादेव महेस्वरः ॥
मया कृतं यदज्ञानात्तत्सर्वं क्षन्तुमर्हसि ॥१४॥
महादेव महादेव महादेव महेस्वरः ॥
भवानेव भवानेव भवानेव गतिर्मम ॥१५॥
महादेव महादेव महादेव त्यसौ त्रृवृत् ॥
मज्जतां भवधोराब्धौ रज्जुवत्तारणी नृणाम् ॥१६॥
महादेव महादेव महादेवेत्ययं ध्वनिः ॥
संसारविजदावाग्निः सत्यं सत्यं न संशयः ॥१७॥
कोटयो ब्रह्महत्याना- मगमगमकोटयः ॥
सद्यः प्रलयमायान्ति महादेवेति कीर्तनात् ॥१८॥

इति ब्रह्माण्ड पुराणे सदाशिवस्तोत्रम् ॥

लेखक कृष्ण प्रशाद आचार्य
सूर्यविनायेक भक्तपुर नेपाल्